## KANNADA

1. Karnatakamahabharatam Udyoga parva by Kumara Vyasa. (Mysore).
2. Tatvaratnapradipika by Balachendra deva. (Mysore).
3. Vyavaharaganitam by Mariyappabhat. (Madras).
4. Srimat Ramayanakiskindhakanda by Venkamatya kavi. (Madras).

## TAMIL

1. Andagola Vilasam with Comt. by Mutta Venkata Subbayyar. (Madras).
2. Anandarangam Kovai. Madras.
3. Kalaikkalanjiyam. Vol. IV.
4. Tutu tirattu. (Madras).
5. Pillai Pinivakatam Vol. II Ed. Kasinatham. Madras.
6. Perur Kovai. (Madras).
7. Saptarshinadi. Vol. III. Madras.
8. Saptarshinadi. Vol.. IV. Madras.
9. Siddhanta Vilakkam. Ed. V. Kunchitapadam. (Madras).
10. Sundarapandyam. Madras.
11. South Indian Temple Inscriptions. Vol. III. Pt. I. Madras.
12. South Indian Temple Inscriptions. Vol. III. Pt. II. Madras.

## MALAYALAM

1. Karanapaddhati By P. Somayaji. (Madras).
2. Yudhistiravijayam with Comt. Ed. O.K. Vasudevapanikkar, Madras.
3. Vetalapanchavimsati Ed. Kumari Sri Devi. Madras.
4. Vaidyasarasangraham. (Madras).
5. Siddhausadhagrandham Ed. Chandra sekharan. (Madras).

## URUDU

1. Nuskha—e—Sahajahani. (Madras).

# पाठशोधनम्

—:⁂:—

( न्यायपरिशुद्धौ अनुमानाध्याये द्वितीयमाह्निकम् )

R. SRINIVASA RAGHAVACHARIAR,
*Asst. Reader, S. V. U. O. R. Institute.*

श्रीमन्निगमान्तमहादेशिकनिर्मिता न्यायपरिशुद्धिः १९१३ तमे क्रैस्तुसंवत्सरे नागरलिपौ शतावधानं तिरुमलै ईच्चंबाडि श्रीनिवासाचार्यैस्समुद्र्यत। पण्डितश्रेष्ठाः R. V. कृष्णमाचार्याः चेट्लूर् नरसिंहाचार्याः V. कृष्णमाचार्याश्च एतन्मुद्रणादिविषये परमं साहाय्यमाचरन्। पुनरपि सेयं न्यायपरिशुद्धिः १९४० तमे क्रैस्तुसंवत्सरे श्रीमद्वेदान्तदेशिकग्रन्थमालासंपादकैरण्णङ्गराचार्यैरमुद्र्यत। तदानीमपि बहवः पण्डितवराः एतन्मुद्रणादिविषये सहायाः अभूवन्। न कोऽप्येषां पाण्डित्ये श्रद्धायां सूक्ष्मदर्शितायाञ्च संशयी भवितुं प्रभवति। एतादृशैः पण्डितवरैर्मुद्रापितेऽप्यस्मिन् ग्रन्थे कुत्रचित् काश्चिदशुद्धयो दृश्यन्ते। तथाहि। श्रीनिवासाचार्यसंपादिते न्यायपरिशुद्धिग्रन्थे अनुमानाध्याये द्वितीयं आह्निकं यदृच्छया पठन्त आस्म। तत्र बहुषु स्थलेषु न स्पष्टमर्थोऽस्माभिरगम्यत। द्विस्त्रिश्च सश्रद्धं आवृत्तिं कृतवतामस्माकं बुद्धौ इदमभात् 'अर्थानवगमो अवगमक्लेशो वा नास्मदीयो दोष इति। परन्तु मुद्रापकान् पण्डितान् तेषां पाण्डित्यवैशिष्ट्यञ्च पर्यालोचयतां अस्माकं हृदयं प्रथमं ग्रन्थे मुद्रणाद्यशुद्धिमारोपयितुं अबिभेत्। पुस्तकशालास्थं कञ्चन तालकोशमादाय अपश्याम। बहुत्र पाठभेदा अलभ्यन्त। मनश्च किञ्चिदिव धीरमभवत्। महद्भिर्मुद्रितेऽप्यस्मिन् ग्रन्थे नूनं अशुद्धयः सन्तीति अस्मानज्ञापयत्। रोगगोपनमिव अशुद्धिगोपनं अन्यथाव्याख्यानं वा नूनमस्मदीयानां दौर्बल्यं ज्ञापयेदिति बोधयन्नन्तरात्मा पाठशोधनकरणे नः प्रावर्तयत्। प्रवृत्ताः स्मः। तस्मिन् द्वितीय आह्निके इदानीं यावत्योऽशुद्धयो दृश्यन्ते यथा च ताः परिष्कर्तव्याः तत् सर्वं अस्मिन् व्यासे प्रदर्शयामः। न नः कुत्रचिदप्याग्रहः। पण्डिताः स्वयं विमृशन्तु। सन्तमस्मद्दोषं दयया ज्ञापयन्तु। सन्तं च गुणं गृह्णन्त्विति प्रार्थयामहे।

१. (ई. श्रीनिवासाचार्य मुद्रिते) तस्मिन् (न्यायपरिशुद्धि) ग्रन्थे ८३ तमे पुटे पञ्चमपङ्क्तौ 'स्वप्रतिसन्धानबलेन' इत्यस्ति। 'स्वप्रतिसन्धानादिबलेन' इति भाव्यम्। तस्मिन्नेव पुटे सप्तमपङ्क्तौ विद्यमानं 'प्रतिसन्धानादिनैव' इतिपदं पर्यालोचयतां इदं व्यज्येत। तालकोशेऽप्यादिपदं दृश्यते।

२. तस्मिन्नेव पुटे दशमपङ्क्तौ 'अपेक्षते' इत्यस्ति । 'अपेक्षेत' इति लिङन्तेन भाव्यम् । 'आप्तश्चेद् ब्रूयात् तत्रापि व्याप्तिमात्रे तेनोपदिष्टे श्रोता स्वयमेवानुमिनुयात्' इति पूर्वपङ्क्तौ लिङ्प्रयोगेऽवहिते तदिदं भायात् ।

३. तस्मिन्नेव पुटे द्वादशीं पङ्क्तिमारभ्य तिसृषु पङ्क्तिषु 'एतदुक्तं भवति – द्विविधानि प्रमाणानि - स्वयमेव सिद्धानि, परवाक्यपूर्वाणि चेति सामान्यत एव विभागः कार्य इति' इत्येकं वाक्यं दृश्यते । अत्र द्वौ इतिशब्दौ स्तः । तालकोशे '.... परवाक्यपूर्वाणि चेति इति सामान्यत एव विभागः कार्य इति' इति त्रय इतिशब्दा दृश्यन्ते । विभागः कार्य इति — अयमितिशब्दः एतदुक्तं भवतीत्यनेनान्वेति । परवाक्यपूर्वाणि चेति — अयमितिशब्दः द्विविधानीत्यनेनान्वेति । अत्र कण्ठोक्तस्य अध्याहृतस्य वा कस्य चन इतिशब्दस्याभावे 'स्वयमेव सिद्धानि' 'परवाक्यपूर्वाणि च' इत्येतत्पदसमुदायद्वयं 'प्रमाणानि' इत्यस्य साक्षाद्विशेषणं भवत् एकैकमपि द्विविधमित्यर्थं दद्यात् । तत् प्रकरणविरुद्धम् — वक्तुरनभिप्रेतञ्च तस्मात् अत्र कश्चिदितिशब्दः आर्थश्शाब्दो वा आवश्यकः । तथाच 'सामान्यतः' इतिपदात् पूर्वं प्रतीकोद्धारणाय अन्यः कश्चन इतिकारः आवश्यको भवति । तथाच 'इति प्रमाणानि द्विविधानि इति सामान्यत एव विभागः कार्य इत्येतदुक्तं भवति' इति शाब्दबोधः । अन्वयसौक्ष्म्यमवगन्तुं आलोचनसौक्ष्म्यमपेक्षितं भवति । मुद्रितग्रन्थे दृश्यमानं इतिकारद्वयं तालकोशे दृश्यमानं इतिकारत्रयञ्च उभयमपि संभवदन्वयमेव भवतीति केचिदभिप्रयन्ति । इतिकारद्वयस्थलेऽपि आर्थो वा कश्चिदितिकार आवश्यक एवेत्यत्र न तेऽपि विप्रतिपत्तुं शक्नुवन्ति । अतः इतिकारत्रयपाठस्समुचिततरः ।

४. ८५ तमे पुटे पञ्चदश्यां पङ्क्तौ 'वयंत्वनियतं ब्रूमः' इत्येकं वाक्यमस्ति । तालकोशेषु बहुषु 'अनियमं' इति पाठो दृश्यते । स एव पाठस्साधुः । न केवलमौचित्यं अपितु 'नियमवदनियमस्याप्याभिमानिकतया .... ....' इत्युपरितनपङ्क्तौ दृश्यमाने नियमानियमपदे अपि इममर्थं द्रढयेताम् । उपरि ८७ तमे पुटे तृतीयपङ्क्तौ सतः 'अनियमः सिद्धान्तितः' इति वाक्यस्य पर्यालोचनेनाप्ययमर्थो निर्णेतुं शक्यते ।

५. ८७ तमे पुटे सप्तमपङ्क्तौ 'निर्णीतं' इत्यस्ति । तालकोशे वर्णितपदं दृश्यते । 'कतरत्तत्त्वमिति न सुखसाध्यम् । साधनेन जायमानं फलं न किमपि दृश्यत' इति मन्यमानाः केचिदेतादृशं विमर्शं व्यर्थं वदन्ति । न ते सूक्ष्मदर्शिनः । अस्ति महान् भेदो निर्णयस्य वर्णनस्य च । प्रयोगसंस्थाननिर्णयं न कोऽपि विवेकी कुर्यात् । व्युत्पादनाय प्रयोगसंस्थान-

विशेषं कश्चन वर्णितवान् स्यात् । न तत्राप्यस्माकं निर्बन्धः इति यथाश्रुतग्राहिणो बोधयति श्रीदेशिकः । अतो वर्णितपदं समुचिततरं भाति ।

६. तस्मिन्नेव पुटे अष्टम्यां पङ्क्तौ 'दृष्टञ्च धूमवतामग्निमत्त्वं' इत्यस्ति । तालकोशे '.... धूमवतां सर्वेषां ....' इति दृश्यते । स एव साधुतरः पाठः । तदर्नामेव यो यो धूमवानित्यनेन साम्यं स्यात् । व्याप्तिबोधनञ्च सुकरं भवेत् ।

७. तस्मिन्नेव पुटे एकादश्यां पङ्क्तौ '.... .... व्यवहारा अपि वर्तन्ते' इत्यस्ति । '.... .... प्रवर्तन्ते' इति तालकोशे संदृश्यते । स पाठस्साधीयान् ।

८. तस्मिन्नेव पुटे अन्तिमपङ्क्त्योः 'न न्यूनाधिका इति निर्बध्नीमः' इति दृश्यते । न न्यूना नाधिका .... ....' इति तालकोशे । स पाठः साधुतरः । 'न न्यूना नाप्यधिकाः .... ....' इति तु साधुतमः ।

९. ८८ तमे पुटे षष्ठपङ्क्तौ 'सूचितम् –' इत्यस्यानन्तरं 'सोऽयं गवयपदाभिधेयः .... .... ....' इत्यादिर्दृश्यते । तालकोशे तु 'सूचितम्' इत्यस्यानन्तरं "उपमानान्तर्भावदशायाञ्चोक्तम् – सोऽयं गवयपदाभिधेयः ...." इति दृश्यते । तालकोशपाठस्साधुः । मुद्रितग्रन्थपाठस्तु न साधुर्भवितुमर्हति । 'सोयं .... इत्यारभ्य, 'इत्यादि' इतिपर्यन्तं पञ्चसु पङ्क्तिषु व्याप्य वर्तमानस्यैकस्य महावाक्यस्य पूर्णक्रियाऽभावेन न्यूनत्वदर्शनात् । सूचितमिति पूर्वेणान्वेति । उत्तरेणान्वेतुं न प्रभवति च । उत्तरस्य सूच्यमानत्वाभावादिति मन्तव्यम् ।

१०. ८९ तमे पुटे तृतीयचतुर्थ पङ्क्त्योः 'पूर्वो वाद इति सामान्य .... ....' इति वाक्यमस्ति । अत्र 'पूर्वः' इति पुंलिङ्गमसाधु । पूर्वा इति स्त्रीलिङ्गेन भवितव्यम् । विधेयप्राधान्यमनुसृत्य तादृशोऽपि पुंलिङ्गप्रयोगस्साधुरेवेति साधयितुं केचित्प्रवर्तन्ते । नैतदुचितं पश्यामः । 'पूर्वो वादः' इति न तावति वाक्यं पूर्णं भवति । अपितु 'पूर्वः, वाद इति सामान्यशब्देनैव विशेषतोऽपि निर्दिश्यते' इति वाक्यं समाप्नोति । तथाच पूर्वपदस्य न वादपदेनान्वयः । अपितु निर्दिश्यते इति क्रियापदेन । तथाच विधेयप्राधान्यकृतः पुंलिङ्गनिर्देशः इति न वक्तुं शक्यम् । पूर्वञ्च 'सा द्विविधा वीतरागकथा विजिगीषुकथाचेति कथाद्वैविध्यमुक्तमस्ति । तयोः प्रथमा वीतरागकथा अत्र पूर्वशब्देन परामृश्यते । तस्मात् 'सा चैवमिति उपरितनवाक्ये श्रीदेशिकेन क्रियमाणस्य स्त्रीलिङ्गप्रयोग एव साधुः ।

स्त्रीलिङ्गप्रयोगस्य पर्यालोचनेनापि पूर्वाशब्द एवात्र साधुरिति ज्ञातुं शक्यते । तस्मात् तालकोशशते दृष्टोऽपि पूर्वशब्दः असाधुरेव ।

११. तस्मिन्नेव पुटे पञ्चमषष्ठपङ्क्तयोः 'परस्य स्वोपदेशन्यायेन निश्चितार्थो व्यवहारो वादः' इति वाक्यमस्ति । न्यायतत्त्वीयमिदं वाक्यं श्रीदेशिकेन अनूद्यते । अत्र 'निश्चित' इति पदमसाधु । 'निश्चय' इति भवितव्यमिति पश्यामः ।

१२. तस्मिन्नेव पुटे एकादशपङ्क्तौ 'स्वपक्षसाधनादौ' इत्यस्ति । .... स्थापनादाविति भवितव्यम् । अष्टमद्वादशपङ्क्तयोः तथा ग्रन्थान्तरे च समानस्थले स्थापनेति पदमेव प्रयुक्तं पश्यन्तो नात्र विप्रतिपद्येरन् ।

१३. ९२ तमे पुटे पञ्चम्यां पङ्क्तौ 'अन्यवराः' इतिपदमस्ति । अत्र 'त्र्यवराः' इति पदमेव साधु । तथैव द्वयोस्तालकोशयोर्दृश्यते । त्र्यवरपदेन योऽर्थः प्रतिपाद्यते सः अन्यवरपदादपि भावयितुं शक्यत इति मन्यमानाः निषादस्थपत्यधिकरणं परित्यक्तवन्तःस्युः ।

१४. तत्रैव पुटे त्रयोदश्यां पङ्क्तौ 'अनित्यस्य' इत्यस्ति । अनियतस्येति भाव्यम् । न केवलमौचित्येन, उपरिस्थप्रतिपादकवाक्यपठनेनापि तदिदं ग्रहीतुं शक्यते । तालकोशेष्वपि बहुषु अनियतस्येत्यस्ति ।

१५. ९४ तमे पुटे पञ्चमषष्ठपङ्क्तयोः 'वादिना प्रथमं स्वसाध्यमुद्दिश्य तत्र........ प्रमाणविशेषो वाच्यः' इति वाक्यं दृश्यते । तालकोशे कस्मिंश्चित् 'उद्दिशता' इत्यस्ति । स साधुतरः पाठः । यथावस्थिते उद्दिश्यपदघटिते वाक्ये 'प्रथमं' इतीदं उद्दिश्य इत्यनेनापि अन्वेतीत्यवश्यं वक्तव्यं भवति । वादस्तदा प्रवर्तते यदा द्वयोर्मध्ये साध्यविषये विप्रतिपत्तिर्भवति । तथाच साध्यस्य प्रथममेव ज्ञातत्वात् तस्य साधुत्वमसाधुत्वं वा परं सभया निर्णेतव्यमित्ययं क्रमोऽभ्युपगन्तव्यः । तदत्र 'वादिना स्वसाध्यमुद्दिशता .... .... प्रथमं वाच्यः' इति पाठ एव सुसङ्गततरो भवतीति ज्ञातव्यम् । उद्दिश्येति पाठे उद्देश्यस्यापि विधेयत्वं भवति । अज्ञातमेव विधेयं भवति । साध्यस्य विशिष्य अज्ञातत्वेच न सभाप्रवृत्तिः । उद्दिशता इति पाठे तु उद्देशस्य अनुवाद्यत्वं प्रथममेव ज्ञातत्वञ्च स्पष्टतरं ज्ञायते । प्रतिज्ञायाः वादिना अवश्यं कर्तव्यत्वात् 'उद्दिशता इत्यानूद्यत ।

१६. तस्मिन्नेव पुटे त्रयोदशचतुर्दशपङ्क्तयोः 'तत्रश्चैवं परस्परवाक्यानुभाषणप्रतिक्षेपाभ्यां उक्तिप्रत्युक्तिपरंपरासिद्धेः' इत्यस्ति । अत्र सिद्धेरिति पञ्चम्याः न प्रयोजनं

यतो नैतत्साध्यस्य कस्यचित् पूर्वत्र परत्र वा निर्देशोऽस्ति । अतः " .... .... परंपरासिद्धिः इति प्रथमयैव भाव्यम् ।

१७. ९६ तमे पुटे सप्तमपङ्क्तौ अनन्वितमित्यस्यानन्तरं पुनरुक्तमित्यस्ति । क्रमभङ्गोऽयम् । अष्टमपङ्क्तौ अधिकमित्यस्यानन्तरं पुनरुक्तं इत्यनेन भवितव्यम् । उपरि क्रियमाणप्रातिस्विकलक्षणादिक्रमदर्शने तदिदं ज्ञायेत ।

१८. ९७ तमे पुटे प्रथमद्वितीयपङ्क्तयोः 'नित्यः शब्द इति कैवल्यकथकेनोक्ते अपसिद्धान्तेन दूषिते तर्हि अनित्योऽस्तु इत्यादिः' (प्रतिज्ञाहानिः) इत्यस्ति । कस्मिंश्चित्ताल-कोशे 'नित्यः शब्दः इत्युक्ते बाधितत्वेन दूषिते तर्हि अनित्योऽस्तु इत्यादिः' इति दृश्यते । कतरदेतयोः श्रीदेशिकानुगृहीतं स्यादिति न वयं अद्य निश्चेतुम् शक्नुमः । कैवल्यकथकमते शब्दस्याप्यनित्यत्वमिति तन्मतावलंबिनां नित्यत्वप्रतिज्ञा प्रतिवादिना अपसिद्धान्तेन दूषयितुं शक्यते । तथा यः शब्दस्य अनित्यत्वं प्रमाणान्तरेणावगमयितुं शक्नोति तेन परकृता नित्यत्व-प्रतिज्ञा बाधितत्वेन दूषयितुं शक्यत इति उभयमपि साधु भवितुमर्हति । नोभयेनापि श्रीदेशि-कानुगृहीतेन भवितुं शक्यत इति परं निश्चिनुमः । निश्चयाय बहवस्तालकोशा द्रष्टव्याः । भूयोभिर्निर्णयः कर्तव्यश्च ।

१९. त[illegible] पुटे चतुर्थपञ्चमपङ्क्त्योः 'तत्रैव अस्तु सामान्यतोऽप्यन्यद् व्यापकं साधनमित्यादिवचने प्रतिज्ञाहान्यादि' इत्यस्ति । कस्मिंश्चित्तालकोशे 'तत्रैव शब्दत्वादित्युक्ते असाधारण्यादिभिर्दूषिते तर्हि कृतकत्वं हेतुरिति' इति दृश्यते । पूर्वप्रतिज्ञातेषु प्रतिज्ञाहानिः हेतुहानिश्चेति द्वावंशौ न्यरूप्येताम् । उपरि च तृतीयोंऽशः दृष्टान्तहानिर्निरूपयिष्यते । मध्ये विवादग्रस्तमिदं वाक्यमस्ति । मुद्रितग्रन्थे विद्यमानं अर्थतश्चासङ्गतम्, प्रतिज्ञाहानेर्निरूपि-तत्वान्निरूपितनिरूपणत्वेन अधिकञ्च भवति । तालकोशे दृश्यमानं तु अर्थतस्सङ्गतमपि हेतु-हानिनिरूपणात्मकत्वात् तस्याश्च निरूपितत्वात् अधिकत्वाख्यदोषमात्रवत् भवति । तस्मादुभय-मप्यसाधु । ततो नैतच्छ्रीदेशिकानुगृहीतमिति निश्चिनुमः ।

२०. तस्मिन्नेव पुटे सप्तमपङ्क्तौ 'एवं धर्मितद्विशेषणहेतुविशेषणदृष्टान्तविशेषणादेरपि हानिरूह्या' इत्यस्ति । अत्र 'धर्मितद्विशेषण' इत्येतदसङ्गतम् । विशेषणहानिप्रस्तावे न धर्मिणः प्रसक्तिरस्ति । 'धर्मिविशेषण' इति कस्मिंश्चित् तालकोशे अस्ति । तदपि नातीव सङ्गतम् । उदयनाचार्यकृते न्यायपरिशिष्टे साध्यविशेषणहानिनिरूपणं क्रियते अस्मिन् प्रस्तावे । तदेवेदमिति कियदपि पर्यालोचनं सूचयेत् । साध्यस्य पक्षं प्रति धर्मत्वात् 'धर्मविशेषण' इति स्यादिति मन्यामहे ।

२१. १०० तमे पुटे चतुर्थपङ्क्तौ 'व्यामोहनार्थं प्रयुक्तमसदपि .... ....' इत्यस्ति । तत्र प्रत्युक्तमिति नातीव साधु । प्रयुक्तमित्येव साध्विति ज्ञातव्यम् ।

२२. तस्मिन्नेव पुटे एकादशद्वादशपङ्क्त्योः 'अनुक्तमप्रक्रान्तमेव .... ....' इत्यस्ति । अस्मिन् पाठे 'अनुक्तमप्रक्रान्तमेव' इत्येष पदत्रयसमुदायः एकमंशं बोधयति । 'अनुक्तमेव अप्रक्रान्तमेव' इति तालकोशे वर्तते । स समीचीनः पाठः । अंशद्वयबोधको हि स भवति । स्पष्टतरो वा ।

२३. तस्मिन्नेव पुटे पञ्चदश्यां पङ्क्तौ 'विषयः' इत्यस्ति । 'विधः' इति तालकोशपाठः । स समीचीनः । 'अयमपि बहुविषयः पूर्ववत्' इति ह्यस्ति मुद्रितकोशे । अपिना समुच्चयद्योतकेन पूर्ववच्छब्देन च पूर्वोक्तमिव अयमपि इत्यर्थो लभ्यते । पूर्वञ्च उक्तविशेषणं, 'इदमपि .... बहुविधम्' इति विभक्तमस्ति । तस्मात् उक्तविशेषणवत् अयमपि उक्तापलापः बहुविधः इत्येव न्याय्यमिति विषयपदं असाम्वेव । उत्तरत्र उक्तविरोध-निरूपणसमयेऽपि 'बहुविध' पदं प्रयुक्तमस्तीति जानन्तो नाक्षिपेयुरिति मन्यामहे ।

२४. १०१ तमे पुटे पञ्चमपङ्क्तौ 'प्रसिद्धमपि विज्ञानं' इत्यस्ति । प्रायस्सर्वत्रे-दमेकरूपं दृश्यते । भगवद्गीताव्याख्याने नारायणार्यैरुक्तमिति श्रीदेशिकेन उक्तापलाप-विषयेऽनूद्यमाने श्लोके अयमाद्यः पादः । 'प्रयुक्तमथविज्ञातं' इति स्यादिति भाति । तदैव प्रकरणमनुगृहीतं भवति । स्थितस्तु पाठो न समञ्जसः । उक्तापलापनिरूपणावसरे विज्ञान-निह्नवनियमनादेरप्रस्तुतत्वात् ।

२५. १०२ तमे पुटे पञ्चमषष्ठपङ्क्त्योः 'अमृतं पीतवानहं । तथापि मे तद्वर्णतः पलितमासीत्' इत्यस्ति । कस्मिंश्चित्तालकोशे " .... .... तथापि तद्वर्णतः फलितमासीत् । इत्यस्ति । नानयोरन्यतरोऽपि पाठः स्पष्टमर्थं ददाति । मुद्रिताद्ग्रन्थात्तालकोशो वरमिति मन्तुमवकाशोऽस्ति ।

२६. तस्मिन्नेव पुटे तृतीयपङ्क्तौ 'स्वाभ्युपगतसिद्धान्तविरुद्धाभ्युपगमोऽपसिद्धान्तः' इत्यस्ति । इदं लक्षणवाक्यम् । अर्थः स्पष्टमवगम्यते । परन्तु कस्मिंश्चित्तालकोशे 'स्वाभ्युप-गतविरुद्धाभ्युपगमोऽपसिद्धान्तः' इति दृश्यते । अनयोः कतरः पाठः श्रीदेशिकानुगृहीतः इति विमर्शनीयम् । सर्वे जानन्ति नोभयमपि तदनुगृहीतं भवितुमर्हतीति । उपरि चतुर्दश-पङ्क्तौ 'अत्र स्वाभ्युपगतसिद्धान्तविरुद्धकरणमात्रव्यवच्छेदाय अयं अभ्युपगमशब्दः' इति

वाक्यमस्ति । अत्रत्योऽभ्युपगमशब्दः ग्रन्थस्थलक्षणवाक्यस्थाभ्युपगमशब्दश्च नैकः । लक्षणवाक्यान्तस्थेन तेन अभ्युपगमशब्देन, उद्दिष्टस्य व्यवच्छेदस्य कर्तुमशक्यत्वात् । तथाच लक्षणवाक्यपूर्वभागे कश्चन अभ्युपगमशब्दः आसीदिति निश्चीयते । तत्रस्थश्चाभ्युपगमशब्दः उद्दिष्टं व्यवच्छेदं कर्तुमलम् । तथाच 'स्वाभ्युपगमविरुद्धाभ्युपगमोऽपसिद्धान्तः इति लक्षण-वाक्यं स्थितं स्यादित्यूह्यते । स्वशब्दः आत्मीयपरः । आत्मीयानां योऽभ्युपगमः तस्य विरुद्धं यत्तस्याभ्युपगम इत्यर्थः । अभ्युपगमशब्दोऽयं, भ्रमात् अन्वयानुपपत्तिमनुसन्दधानैः कैश्चिल्लेखकैः 'अभ्युपगत' इति विपर्यासितः । अन्यैश्च कैश्चित् चतुर्दशपङ्क्तिस्थविवरण-वाक्यभावनाभावितान्तःकरणैः लक्षणवाक्यमपि विवरणवाक्यतुल्यमलिख्यत । लक्षणवाक्यञ्चेत् इयद्विशदं स्थितं स्यात् प्रायः विवरणवाक्यमेव न प्रवृत्तं स्यात् । लक्षणवाक्यपूर्वभागे अभ्युपगमशब्द एव स्थितः स्यात् न अभ्युपगतशब्दः इति मणिकण्ठकृतं न्यायरत्नं पश्यतां अवगतं स्यात् ।

२७. १०३ तमे पुटे एकादशपङ्क्तौ 'अथ चेत् स एवावष्टंभेन पृष्टः पृथक्त्वं प्रतिब्रूयात्, तथाप्यपसिद्धान्तावतारः' इत्यस्ति । प्रयुक्तस्य तात्पर्यसिद्धस्य वा यद्यपेः प्रति-भटतया तथापिः तत्रतत्र प्रयुज्यते । अत्र तादृशस्य यद्यपेरभावात् तथापिप्रयोगोऽनुचितः । यदेः पर्यायस्य चेत्पदस्य प्रयोगे तर्हिपदस्य तत्पर्यायस्य तदापदस्य वा प्रयोग उचितः । अत्र चेत्पदमस्ति । किञ्च वाक्येऽस्मिन् पूर्वक्रिया न दृश्यते । प्रयुक्तस्य लाभेऽध्याहारोऽनुचितः' तस्मात् तथापीति पदमत्र असाधु । 'तदास्ति' इति साधु स्यादिति भाति । मन्यामहे पण्डिता न विवदेरन्निति ।

२८. तस्मिन्नेव पुटे चतुर्दशपङ्क्तिस्थे पूर्वनिर्दिष्टे वाक्ये सत् 'विरुद्धकरण' पदं 'विरुद्धाचरण' इति स्थितं स्यात् । लेखकैरव्युत्पन्नैर्विपर्यासितः । अनन्तरवाक्ये विद्यमानं 'विरुद्धाचरण'पदं पर्यालोचयतां नेदं नावगतं भवेत् ।

२९. तस्मिन्नेव पुटे अन्तिमपङ्क्तौ 'परिहृतसर्वापराधेन' इत्यस्ति । पूर्वापरवाक्यानि प्रकरणञ्च पर्यालोचयतां 'परिहृतसर्वविरोधेन' इति भाव्यमिति भायात् ।

३०. १०४ तमे पुटे प्रथमद्वितीयपङ्क्त्योः 'न चैतावता सर्वेषामपि निग्रहस्था-नानां अपसिद्धान्ततेति' इत्यस्ति । नात्र कस्यचिदुपात्तविषयस्य उपसंहारः क्रियते । न वा प्रतीकोद्धारणं क्रियते । नापि कस्यचित्साध्यस्य साधनं समर्प्यते । तन्नात्र अन्ते इति शब्दस्समञ्जसः । अतः '.... .... अपसिद्धान्ततास्ति' इति भाव्यमिति सूक्ष्मदृष्टयो ज्ञातुमलम् ।

३१. तस्मिन्नेव पुटे तृतीयचतुर्थपङ्क्त्योः 'एतत्सिद्धान्तवर्त्मना व्यवहरिष्यामीति कथारंभं प्रतिज्ञाय तत्पर्यवसानात् पूर्वं तद्विरुद्धभाषणात्' इत्यस्ति। अत्र 'कथारंभे' इति तालकोशे दृश्यते। स एव समीचीनः पाठः। 'कथारंभं इति चेत्स्यात् स एव प्रतिज्ञायाः कर्म स्यात्। न स वस्तुतः कर्म। अपितु एतत्सिद्धान्तवर्त्मना व्यवहरिष्यामीत्यनेनोच्यमानो व्यवहारविशेषः। अत एव 'तत्पर्यवसानात्पूर्व' मिति सङ्गच्छते। कथारंभश्चेत्कर्म स्यात् तत्पर्यवसानात्पूर्वमित्येतदसङ्गतं स्यात्।

३२. १०५ तमे पुटे तृतीयपङ्क्तौ महद्भिरक्षरैः 'सिद्धान्तः' इति शीर्षकं पृथक्-पङ्क्तौ दत्तमस्ति। निग्रहस्थाननिरूपणमध्ये पतितमिदं महच्छीर्षकं प्रथमं पठितॄन् सर्वानपि भ्रामयति सिद्धान्तोऽपि निग्रहस्थानेष्वन्यतम इति। क्षणं विमृश्य पण्डिताः सिद्धान्तं अनिग्रहस्थानं जानन्तो भ्रमकृतमेवंमुद्रणमिति निश्चिन्वन्ति। परिपक्वेतरबुद्धिः कश्चित् पण्डितंमानी अण्णङ्गराचार्यमुद्रापितायां न्यायपरिशुद्धावपि सिद्धान्तपदमिदं निग्रहस्थान-निरूपणमध्ये निग्रहस्थानान्तरशीर्षकवत् महद्भिरक्षरैर्मुद्रितं प्रदर्शयन् अस्मानाक्षिपत्। उच्यमाना युक्तीर्नजग्राह। निग्रहस्थानगणनसमये श्रीदेशिकेन सिद्धान्तो निग्रहस्थानेष्वन्यतमो न गणित इति प्रदर्शनानन्तरं अनिच्छन्नेव शान्तो बभूव। बाल्यमारभ्य विमर्शपथे बहुपरिश्रमं कृतवन्तः स्मः। पण्डिताः स्मः। कारणं ब्रूमः। अथापि नास्माकं वचसि तस्यासीद्विश्वासः। पण्डितेभ्योऽपि तालकोशलेखकाः अक्षरप्रोतारश्च विश्वास्यतरा अभवन्। महतामपि कचित् भ्रंशस्संभवतीति मन्तुं नैच्छत्।

३३. १०६ तमे पुटे त्रयोदशपङ्क्तौ 'इति चतुर्धा विभागमाहुः' इत्यस्ति। चतुर्धापदं सर्वात्मना अत्र असङ्गतम्। वाक्यशैलीच नानुकूलाऽस्ति। चतुर्थमिति पदं सङ्गतम्। तालकोशेऽपि चतुर्थपदं स्पष्टं दृश्यते।

३४. १०७ तमे पुटे द्वितीयतृतीयपङ्क्त्योः 'केवलत्वयमस्य सिद्धान्त इति निर्णये अनुषङ्गसिद्धिर्लिङ्गं भवतीत्येतावता यदि पृथगभिधानं काममभिधीयतामिति' इत्यस्ति। अत्र श्रीदेशिकः पूर्वं, सिद्धान्तं त्रिधा विभज्य लक्षणादि कथयित्वा, चतुर्थं केचिदाहुरिति अक्षपादश्चाहेति च आधारसिद्धान्तं उपक्रम्य, तस्य उक्तेषु त्रिष्वन्तर्भावसंभवात् न पृथक्त्व-मुचितमिति खण्डयित्वा, उपर्याह 'केवलं इत्यादि। यथास्थिते अस्मिन् वाक्ये अनुषङ्गसिद्धिः निर्णयस्य लिङ्गमित्युक्तं भवति। 'निर्णये' इति विषयसप्तमी। निर्णयस्येति फलति। (न सतिसप्तमीति समर्थयितुं शक्यते। लिङ्गस्य (अनुषङ्गसिद्धिरूपस्य) लिङ्गत्वनिरूपकस्य कस्यचिदभावप्रसङ्गात्।) अनुषङ्गसिद्धेर्निर्णयं प्रति लिङ्गत्वे तस्याः पूर्वतनत्वमुक्तं भवति।

विवादग्रस्तमिदं वाक्यं अंशे अर्थतश्च परानुवादरूपम् । यथास्थितमनुवदितव्यम् । पुरोवादस्तु 'कस्य चित्साधने अनुषङ्गसिद्धोऽन्य आधारसिद्धान्तः' इत्येवंरूपः । तत्र 'साधने' इति सतिसप्तमी । साधनस्य पूर्वत्वं अनुषङ्गसिद्धेः पश्चात्तनत्वञ्च स्पष्टं प्रतीयते । तथाच पुरोवादानुवादाविमौ परस्परविरुद्धौ भवतः । तस्मादेवं निर्णीयते । निर्णयः इति प्रथमया भाव्यम् । अनुषङ्गसिद्धेरिति च षष्ठ्या भाव्यम् । तथाच निर्णयस्य पूर्वतनत्वं अनुषङ्गसिद्धेः पश्चात्तनत्वञ्च पुरोवादानुरूपं अनुवादेऽपि रक्षितं भवति । अर्थश्च सङ्गतो भवति ।

३५. तस्मिन्नेव पुटे तृतीयपङ्क्तौ 'काममभिधीयतामिति' इत्यस्ति । नात्र इतिकारप्रयोगस्य औचित्यमस्ति । इतिकारकार्यस्य प्रतीकोद्धारणस्य हेतुसमर्पणस्य अन्यस्य वा कस्य चिदत्राभावात् ।

३६. १०८ तमे पुटे एकादशपङ्क्तौ 'व्यवहितान्वयमप्यनन्वयं' इत्यस्ति । 'व्यवहितान्वयमप्यनन्वितं' इति स्यादिति भाति । निग्रहस्थानस्यात्र निरूप्यमाणस्य अनन्वितनामकत्वञ्च अस्मद्धानमाद्रियते ।

३७. तस्मिन्नेव पुटे द्वादशपङ्क्तौ 'पद्यनियम' इत्यस्ति । पद्यादिनियम इति तालकोशपाठस्साधुतरः । उपलक्षणत्वकल्पनक्लेशाभावस्साधुतरत्वस्थापकः ।

३८. १०९ तमे पुटे प्रथमद्वितीयपङ्क्त्योः 'तत्रानन्वितनिग्रहस्थानावकाशः' इत्यस्ति । तालकोशे 'तत्रास्त्वनन्वित ........' इत्यस्ति । तालकोशपाठः न केवलं स्पष्टतरः अपितु विपरीतभ्रमसंभवञ्च वारयति ।

३९. ११० तमे पुटे तृतीयपङ्क्तौ 'वाद्युक्तमशेषमदूषयित्वा' इत्यस्ति । 'वाद्युक्तमदूषयित्वा' इति कस्मिंश्चित् तालकोशे अशेषपदरहितः पाठो दृश्यते । स साधुतर इति मन्यामहे । यथास्थिते पाठे अङ्गीकृते, स्वपक्षं साधयता प्रतिवादिना वाद्युक्तमशेषं दूषयितव्यमिति स्यात् । न तत्प्रामाणिकम् ।

४०. तस्मिन्नेव पुटे पञ्चमषष्ठपङ्क्त्योः 'नियमकथायामभ्युपगतक्रमातिक्रमेण न कुर्यादिति रहस्यम्' इत्यस्ति । नास्मिन् वाक्ये 'न कुर्या' दित्यस्य कर्म निर्दिश्यते पूर्वापरपर्यालोचने कृते कर्माध्याहारोऽपि न संभवति । तदयं पाठोऽशुद्ध इति निर्णेतुं शक्यते । '.... क्रमातिक्रमं न कुर्यात् .... ....' इति भाव्यम् । 'नियमकथां .... .... क्रमातिक्रमेण न कुर्यादिति शोधने क्रियमाणेऽपि कर्मसंपादनं सुलभं भवतीति केचिन्मन्येरन् । उपरिवाक्यपर्यालोचने 'नियमकथायां' इत्यस्याः सप्तम्या रक्षणं न्याय्यं भासेत ।

४१. तस्मिन्नेव पुटे षष्ठसप्तमपङ्क्त्योः 'अनित्यः शब्द इत्यादिप्रयोगस्तु विपर्यासेऽपि शीघ्रान्वयप्रतिपत्तेरनियमकथायां वादे च सोढव्यः' इत्यस्ति । 'अनित्यः शब्दः' इति प्रयोगः अवयवांशविपर्यासाख्यं (अप्राप्तकालम्) निग्रहस्थानं भवतीति पूर्वमुक्तम् । स विपर्यासः नियमकथायां दोषो भवति । अनियमकथायां वादे च शीघ्रान्वयप्रतिपत्तेर्लोपाभावात् स विपर्यासः सोढव्यः इति अस्मिन् वाक्ये उच्यते । तस्मात् 'विपर्यासे' इति सप्तमी न साध्वी भवितुमर्हति । विपर्यासः इति प्रथमया भाव्यम् । सप्तम्यैव भाव्यमिति निर्बन्धद्भिः विपर्यासत्वेऽपि इति भावनिर्देशेन तदा भवितव्यं स्यादिति ज्ञातव्यम् । विद्यमानपाठस्य भावपरत्वमगतिका गतिः अनुचितञ्च ।

४२. तस्मिन्नेव पुटे दशमपङ्क्तौ 'त्रिभङ्ग्यन्तराभिधानेऽपि' इत्यस्ति । त्रीणि भङ्ग्यन्तराणि तैः अभिधानमिति वा त्रिभङ्ग्यन्तरं यथा तथा अभिधानमिति वा विग्रहः । अन्ततः 'त्रिभङ्ग्यन्तरेणाभिधानेऽपि' इति भाव्यमिति निश्चितवन्तः स्मः । अस्मत्तोऽपि पूर्वं कश्चन प्राज्ञः इदं शोधनमेवं कृतवानस्तीत्यधुना ज्ञायते । वादी (प्रतिवादी वा) स्वकीयं प्रतिपाद्यं तथा विशदं ब्रूयात् यथा प्राश्निकादयः सम्यक् जानीयुः । यदि सकृद्वचनेन विशदं वक्तुं न शक्नोति द्विर्ब्रूयात्, अपेक्षायां त्रिश्च ब्रूयात्, प्रथमप्रतिपादनसमये या प्रतिपादनभङ्गी अन्वस्थियत न तां द्वितीये, तत्र याऽन्वस्थियत न तां तृतीये अनुसरेत् । तथापि चेत् प्राश्निकादयो न जानीयुः तर्हि अविज्ञातार्थनामा दोषो वक्तुरापततीति वाक्यस्यास्य संपूर्णस्य पिण्डितोऽर्थः ।

४३. १११ तमे पुटे षोडशपङ्क्तौ 'प्रकृतानन्वित .... ....' इत्यस्ति । 'प्रकृतानुपयुक्त ....' इति कस्मिंश्चित् तालकोशे दृश्यते । स साधुतरः पाठो भवेत् । अत्र निरूप्यमाणस्य अर्थान्तरस्य प्रकृतानुपयुक्तवचनत्वरूपत्वात् ।

४४. ११२ तमे पुटे चतुर्थपङ्क्तौ 'कुमारिलादेः' इत्यस्ति । नैयायिकस्येति पूर्ववाक्यप्रस्तुतत्वात् 'कौमारिलादेः' इति युक्ततरं स्यादित्यभात् । तथैव स्वग्रन्थे शोधनं अकरवाम । तालकोशेऽपि तथाऽस्तीति पश्चादजानीम । संवादलाभेन सन्तुष्टाश्च अभवाम ।

४५. तस्मिन्नेव पुटे द्वादशपङ्क्तौ 'आत्मसिद्धान्तसिद्धं पूर्णं च वदेदित्यादेशः,' इत्यस्ति । विद्यमानेऽस्मिन् पाठे चकारबलात् द्वयं विधेयं भवति आत्मसिद्धान्तसिद्धं वदेत् पूर्णञ्च वदेदिति । न्यूनप्रकरणत्वात् पूर्णं वदेदित्येव विधातुमुचितम् । सिद्धान्तसिद्धं वदेदिति न प्रकृतम् । तत्रापि विधौ विधेयद्वयकृतो वाक्यभेदश्च भवेत् । तस्मात् 'आत्मसिद्धान्तसिद्धं

पूर्णं वदेत् ' इति चकाररहितः पाठस्साधुः । ' आत्मसिद्धान्तसिद्धमपूर्णं न वदेदिति ' तालकोशे कस्मिंश्चित् दृश्यमानः पाठोऽपि व्यतिरेकविधया प्रवृत्तः चकाररहितमिमं पाठं समर्थयति । तालकोशीया व्यतिरेकविधा नान्वयविधातःस्वरसतरेति न तं पाठमाद्रियामहे ।

४६. ११४ तमे पुटे षष्ठसप्तमपङ्क्त्योः ' स्वोक्तिवशात् परेण शब्दतोऽर्थतो वा प्रतिपन्नस्यैव निष्प्रयोजनं वचनं पुनरुक्तम् ' इत्यस्ति । सर्वेषु तालकोशेषु सोऽयं पाठस्समानस्समुपलभ्यते । ' शब्दतः प्रतिपन्नस्य पुनर्वचनं अर्थतः प्रतिपन्नस्य पुनर्वचनं इति द्वैविध्यं कर्तुमुचितामेव भाति । न तथा श्रीदेशिक उपरि विभागमाह । अपितु ' तत् (पुनरुक्तं) द्विधा अर्थपुनरुक्तं आक्षेपपुनरुक्तञ्चेति ' इत्याह । विद्यमाने पाठे ' प्रतिपन्नस्य ' इत्यस्य कर्म न लभ्यते । अतः ' शब्दतोऽर्थतो वा ' इति नायं पाठः श्रीदेशिकानुगृहीतः । अपितु ' शब्दार्थस्य ' इति वा ' शब्दादर्थस्य ' इति वा ' शब्दतोऽर्थस्य इतिवानुगृहीतं स्यादिति मन्यामहे । एवञ्चेत् उक्तं दोषद्वयं परिहृतं भवति । उपरि च ' अन्ये शब्दपुनरुक्तमित्यपि भेदमाहुः ' इति वदन् श्रीदेशिकः पूर्वोक्तं अर्थपुनरुक्तं ( अर्थस्य पुनर्वचनं ) इति सम्यगनुमापयत्यस्मान् ।

४७. तस्मिन्नेव पुटे दशमैकादशपङ्क्त्योः ' धर्मिविशेषोऽप्यर्थसिद्ध एव ' इत्यस्ति । ' आक्षेपसिद्ध एव ' इति तु सङ्गतः पाठः स्यादिति मन्यामहे । अर्थपुनरुक्तं आक्षेपपुनरुक्तञ्चेति पुनरुक्तं द्विधा विभज्य प्रथमस्य उदाहरणं दत्वा द्वितीयस्य उदाहरणदानसमये इदं वाक्यमस्तीति स्मृते अस्मदीयः पाठस्साधुर्भासेत ।

४८. तस्मिन्नेव पुटे चतुर्दशपङ्क्तौ ' शब्दपुनरुक्तमिति ' इत्यस्ति । तालकोशे ' शब्दपुनरुक्तमित्यपि ' इत्यस्ति । स सङ्गतः पाठः ।

४९. ११५ तमे पुटे पञ्चमपङ्क्तौ ' अनभिधान ' इत्यस्ति । अनवधान ' इत्युचितं तालकोशानुगृहीतञ्च ।

५०. ११६. तमे पुटे द्वादशत्रयोदशपङ्क्त्योः ' उत्तरस्याप्रतिपत्तिरप्रतिभेति प्राचामुपदेशः साधनाप्रतिपत्तेरप्युपलक्षणार्थः ' इत्यस्ति । साधनाद्यप्रतिपत्तेरिति पाठ एव साधुः । श्रीदेशिकेन ' साधनदूषणाद्यप्रतिपत्तिरप्रतिभा ' इति पूर्वमुक्त्वा उपर्येतदुच्यते इति ज्ञाते इदं व्यज्येत । आदिपदाभावे साधनपदं दूषणादीनामुपलक्षकमिति वक्तव्यं भवेत् । नेदमुपलक्षणकथनार्हं स्थलम् ।

५१. ११७ तमे पुटे चतुर्थपङ्क्तौ 'केवलप्रतिभा' इत्यस्ति । मुद्रणदोषोऽयम् । 'केवलाप्रतिभा' इति भाव्यम् ।

५२. तस्मिन्नेव पुटे षष्ठपङ्क्तौ 'तदहङ्कारखण्डनञ्च' इत्यस्ति । 'तदहङ्कार-खण्डनाच्च' इति पाठस्तालकोशे दृश्यते । स समीचीनः पाठः । प्रपूर्ववाक्यनिर्दिष्टस्य निरोधाख्यस्य साध्यस्य पूर्ववाक्यनिर्दिष्टायाः पराजयव्यक्तेरिव एतद्वाक्यनिर्दिष्टस्याहङ्कारखण्डन-स्यापि हेतुत्वात् 'अहङ्कारखण्डनाच्च' इति पञ्चम्यन्तपाठः साधुः । अथवा 'अहङ्कार-खण्डनञ्चेति प्रथमेव पूर्ववाक्येऽपि 'तत्पराजयव्यक्तिः' इति प्रथमया भाव्यम् । तथासति वाक्यद्वये अंशद्वयं स्वतन्त्रप्रतिपाद्यं भवति । पञ्चमीप्रथमाकृतं वैरूप्यन्तु कथञ्चिदपि न युज्यते ।

५३. तस्मिन्नेव पुटे सप्तम्यां पङ्क्तौ 'अप्रतिभासहेतुः' इत्यस्ति । अप्रतिभायाः प्रकृतत्वात 'अप्रतिभाहेतुः' इति न्याय्यं स्यात् । तालकोशेऽपि 'अप्रतिभाहेतुः' इत्यस्ति ।

५४. तस्मिन्नेव पुटे द्वादशपङ्क्तौ 'अनिग्रहः' इत्यस्ति । 'अनिग्रहत्वम्' इत्युचितः पाठः । अनावश्यकापसरणव्याजवचनं विक्षेपाख्यं निग्रहस्थानं भवतीति पूर्वमुक्त्वा दृष्टान्तञ्च प्रदर्श्य उच्यते आवश्यकानामिति । आवश्यकानि व्याजवचनानि न निग्रहस्थानानि भवन्ति इत्यर्थे षष्ठ्या प्रारभ्य वाक्यं प्रवर्तते आवश्यकानामिति । तथाच अनिग्रहत्वं इत्येव न्याय्यम् ।

५५. तस्मिन्नेव पुटे अन्तिमपङ्क्तौ 'वादादपसरणं' इत्यस्ति । वाक्छूरगर्हितमिति विशेषणे सम्यगवहिते 'वादाहवादपसरणं' इति पाठोऽत्र समञ्जसतरस्स्यादिति भायात् । तालकोशेऽपि वादाहवादित्यस्ति ।

५६. ११८ तमे पुटे सप्तमाष्टमपङ्क्त्योः 'अतूष्णीकस्य तु प्रतिभावतोऽप्यनेनैव निवर्तनीयत्वादिति' इत्यस्ति । 'अतूष्णीकस्य तु प्रतिभावतोऽप्यनेनैव निग्राह्यत्वम्' इति तालकोशे कस्मिंश्चित् दृश्यते । स साधुः । स एव पञ्चम्यन्तः कृतश्चेत् साधुतरः स्यात् ।

५७. तस्मिन्नेव पुटे द्वादशपङ्क्तौ 'अवसरेऽप्यनुद्भावनं' इत्यस्ति । अपिरहितः तालकोशपाठस्समुचितो भाति । न्यायपरिशिष्टे अपिरहितः अवसरशब्दः प्रयुक्तो दृश्यते ।

५८. तस्मिन्नेव पुटे उपान्त्यपङ्क्तौ 'वादिनश्च पाक्षिकापजयहेतौ बुद्धिपूर्वप्रवृत्त्य-योगात्' इत्यस्ति । तत्र 'वादिनश्च' इति एकवचनप्रयोगः न समीचीनः । बुद्धिपूर्वप्रवृत्त्य-

योगस्य वादिप्रतिवाद्युभयसाधारणत्वात् 'वादिनोश्च' इति द्विवचनप्रयोगस्समीचीनः स्यात्। वादी प्रतिवादी उभावपि वादिशब्देन कथ्येयाताम् । ११९ तमे पुटे चतुर्थपङ्क्तौ विद्यमानं वादिप्रतिवादिपरं उभयपदं द्विवचनौचित्यसाधकं भवेदिति मन्यामहे ।

५९. ११९ तमे पुटे प्रथमद्वितीयपङ्क्त्योः 'पतितं मामयं न जानातीति दोषास्पृष्टयन्तरोद्भावनवदपरिहास्यत्वादनिग्रहस्थानमेवेत्यपरे' इत्यस्ति । अस्य पदसमुदायस्य प्रकृतोपयोगी अक्लिष्टः कश्चनार्थो वक्तुं न शक्यते । 'स्वदोषोद्भावनेन परनिरसनं न निग्रहस्थानं भवतीति परे वदन्ति' इत्यर्थः प्रकृतः । दृष्टान्तपुरस्सरं सोऽर्थोऽनेन वाक्येन निरूप्यते । 'अपरिहास्यत्वात्' इत्येतदसाधु । परिहास्यत्वादिति भाव्यम् । 'पतितं मामयं न जानातीति दोषास्पृष्टयन्तरोद्भावनवत्' इत्यत्र प्रतीकोद्धारकेण इतिशब्देन 'इत्याकारकदोषास्पृष्टि .... ....' इत्यर्थलाभात्, न जानातीत्यस्य दोषारोपणरूपत्वात् 'दोषस्पृष्टि' इति भाव्यमिति मन्यामहे । तालकोशे कस्मिंश्चित् 'पतितं मामयं न जानादि (ति?) स्पृष्टयन्तरोद्भावनन्तु स्पष्टीकृतवानितिवदपहास्यत्वादनिग्रहस्थानमेवेदमित्यपरे' इतिपाठस्समुपलभ्यते । अपरिहास्यत्वादित्यस्य स्थाने अपहास्यत्वादित्यस्ति । सन्तोषः । अस्पृष्टिपदस्थाने अन्वयार्हं स्पृष्टिपदं समुपलभ्यते । महान् सन्तोषः । परन्तु कूपखननावसरे वेतालोत्पत्तिरिव महान् पाठभेदः आविरस्ति । अत्र विमर्शक्लेशं पाठकमहाशयेभ्यो विसृजामः । अत्र तालकोशपाठोऽप्यंशे न समीचीन इत्यस्मदभिप्रायः ।

यः स्वकीयं परकीयं वा दोषं न जानाति न परिहरति न परिहर्तुमिच्छति प्रयतते वा न स पण्डितो भवितुमर्हतीति वयमभिप्रेमः । दोषज्ञ एव विद्वान् भवति । 'तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्' इत्येतज्जानन्तो महान्तः परिश्रमेण महता कृतमिमं विमर्शं स्वयं विमृश्य सादरं गुणदोषान्वदेयुरिति मन्यामहे । अस्मिन्नेव आह्निके अन्यान्यपि कानिचित् अशुद्धानि एतन्मुद्रणानन्तरं समुपालभ्यन्त । अवकाशाभावात् तानि नात्र लेखे संशोध्यप्रकाशितानि ।



|| श्रीः ||

# || विखनश्शब्दविमर्शः ||

PANDIT, R. PARTHASARATHI AYYANGAR (Reader in Agama, Retired).



विदितमेवेदं विश्वेषामपि विदुषां, यत् वैदिके लौकिके च वाङ्मये बहुत्र विखनश्शब्दः प्रयुक्तचरः इति, तत्पर्यायत्वेन वैखान, वैखानस, विखनस शब्दाश्चोपलभ्यन्त इति च। अस्य शब्दस्य प्रवृत्तिनिमित्त – व्युत्पत्तिप्रदर्शनादेः पूर्वं अद्योपलभ्यमानेष्वाकरग्रन्थेषु परिदृश्यमानाः केचन प्रयोगाः सप्रकरणमुदाह्रियन्ते। बहुष्वर्थेषु तत्र तत्र प्रयुज्यमानस्यास्य शब्दस्य सर्वार्थसङ्ग्राहकः प्रयोजकः कश्चिदाकारः प्रवृत्तिनिमित्तं भवितुमर्हति न वेति जिज्ञासया विदुषां पुरतः लेखोऽयमुपाह्रियते। यथा।

१. परस्मिन् ब्रह्मणि श्रीमन्नारायणे—

(१) 'यत्तस्मिन्नुपलभ्यं ते ततेजस्तत्तुरीयमयम्।
तत् **वैखानः** परं ब्रह्म इति वेदविदो विदुः॥' (महाभारते आदिपर्वणि)

(२) '**वैखानः** सामगायनः।' (महाभारते सहस्रनामाध्याये)

२. चतुर्मुखे-(१) '**वैखानसऋषेः** पूर्वं विष्णोर्वाणी समुद्भवेत्।
त्रयीरूपेण सङ्कल्प्य इत्थं देही विजृम्भते।' (सीतोपनिषदि)

(२) '**विखनसाऽर्थितो** विश्वगुप्तये सख उदेयिवान् सात्त्वतां कुले।'
(भागवते गोपिकागीते)

३. समष्टिवेदे-(१) 'हरेर्मुखान्नादः, तन्नादाद्बिन्दुः, बिन्दोरोङ्कारः, ओङ्कारात् परतो राम **वैखानस** पर्वतः॥' (सीतोपनिषदि)

(२) 'वेदानां व्यासनात्पूर्वं प्राग्रूपं मिलितन्तु यत्। तान्तु **वैखनसीं** शाखामिति वेदविदो विदुः॥' (मरीचि आनन्दसंहितायाम्)

४. ऋग्विशेषे— 'अग्ने पवस्व स्वपा अस्मेवर्चस्सुवीर्यम्।' (ऋग्वेदे ८-३८)

(१) 'आयुष्मानग्ने ............' (ऋग्वेदे ३५-१७)

'अग्न आयूँषि पवस आसुव।' (ऋग्वेदे १९-३८)

(एताः ऋचः वैखानसदृष्टत्वेन **वैखानसनाम्न्यः** इति भाष्ये)

(२) 'पवित्राणां पवित्रन्तु पावमान्यस्त्वृचो मताः।'
'**वैखानसाः** ऋचस्त्रिंशत् पवित्राः परमा मताः॥'
(शौनकीयसर्वानुक्रमण्यां चरणव्यूहे च)

५. सामविशेषे – 'न किष्ट कर्मणा नशदिति बृहत्यः अभ्यारम्भेण जगत्यः ............
वैखानसं साम भवति ।'　　(साम (ताण्ड्य) ब्राह्मणे १४-४-६)
'न किष्ट कर्मणा नशद्यश्चकार ........' इदं च सामस्वरूपम् (साम प्र. ३-२-२-१)
'वैखानसं पूर्वेऽहन् साम भवति' यजुर्वेदे (७-१-८-३) अस्य साम्नः विनियोगो दृश्यते ।

६. ऋषिविशेषे–(१) 'कं नः चित्रमिषण्यसि चिकित्वान्'　　(ऋग्वेदे १०-९९)
'अस्या ऋचः वम्रो वैखानसः ऋषिः' इति भाष्यम् ।
(२) 'पौरुहन्मनं भवति पुरुहन्मा एतेन वैखानसोऽञ्जसा स्वर्गं लोकमपश्यत्'
अत्र पुरुहन्मा वैखानसः ऋषिः इति भाष्यम् ।　　(सामब्राह्मणे १४-९-२-८)
(३) 'अग्न आयूँषि पवस आसुव'　　(सामवेदे पूर्वार्चिके ६-५-१-४)
'पवमानस्य ते कवे वाजिन् सर्गा असृक्षत' (सामवेदे उत्तरार्चिके १-१ १३१. सूक्तम्)
'पवस्व विश्वचर्षणे'　　(ऋग्वेदे ९-६६. सूक्तम्)
अत्र शतं वैखानसा ऋषयः इति भाष्यम्
'वैखानसा वा ऋषयः इन्द्रस्य प्रिया आसन्'　　(सामब्राह्मणे १४-४-७)

७. वालखिल्यसहपठितेषु वैखानसेषु—–
(१) 'ये नखाः ते वैखानसाः, ये वालाः ते वालखिल्याः' (तैत्तिरीये आरण्यके).
(२) 'तत्र वैखानसा नाम वालखिल्या महर्षयः । प्रकाशमाना दृश्यन्ते सूर्यवर्णाः तपस्विनः' ।　　(श्रीरामायणे किष्किन्धाकाण्डे ४०—६०)

८. सरोविशेषे— 'हैमपुष्करसञ्छन्नं तत्र वैखानसं सरः ।
तरुणादित्यसङ्काशैः हंसैर्विचरितं शुभैः ॥'
(श्रीरामायणे किष्किन्धाकाण्डे ४०—६१)

९. वेदशाखाभेदे—'तत्र तैत्तिरीयका नाम द्विभेदा भवन्ति औखेयाः खाण्डिकेयाश्चेति ।'
(औखेयाः - वैखानसाः)　　(चरणव्यूहे)

१०. कल्पसूत्रविशेषे–'येन वेदार्थविज्ञेन लोकानुग्रहकाम्यया ।
प्रणीतं सूत्रमौखेयं तस्मै विखनसे नमः ॥'
औखेयं – वैखानससूत्रमित्यर्थः ।　　(भृगुसंहितायाम्)

११. कल्पसूत्रनिर्मातरि – पूर्वोदाहृतश्लोक एवात्र चोदाहरणं भवितुमर्हति ।

१२. आश्रमविशेषे– 'तस्याश्रमविकल्पमेके ब्रुवते ब्रह्मचारी गृहस्थो भिक्षुः **वैखानस**' इति ॥

१३. आश्रमधर्मेषु — 'मूलैरेके फलैरेके पुष्पैरेके दृढव्रताः । [ (गौतमधर्मसूत्रे)
वर्तयन्ति यथान्यायं **वैखानसमते** स्थिताः' ॥ (महाभारते शान्तिपर्वणि)

१४. अग्निविशेषे — 'इममग्निं श्रामणकमित्याह भगवान् विखनाः' (वैखानससूत्रे) अत्र अस्मिन् श्रामणकाग्नौ **वैखानसाग्निरिति** सार्वत्रिको व्यवहारो दृश्यते ।

१५. इष्टकाविशेषे — 'मूर्धासि राडिति सप्त वालखिल्याः पुरस्तादुपदधाति पश्चात्प्राचीः सप्त **वैखानसीः**' (इष्टका उपदधाति) । (वैखानसश्रौतसूत्रे १९,–३)

१६. वैखानसकल्पसूत्रानुयायिषु—

(१) 'विप्रा **वैखानसाख्या** ये ते भक्तास्तत्त्वमुच्यते ।
एकान्तिनस्सुमत्त्वस्थाः देहान्तं नान्ययाजिनः ॥ ' (पौष्करे)

(२) "दृश्यन्ते ह्येते वंशपरम्परया वेदमधीयानाः वैखानससूत्रोक्तवैदिकसकल-संस्कारशालिनः वर्णाश्रमधर्मकर्मठाः भगवदेकान्ताः ब्राह्मणाः "
(श्रीवेदान्तदेशिकविरचितायां न्यायपरिशुद्धौ शब्दाध्याये)

(३) 'कामाचाराः पाशुपताः तथा वै लिङ्गधारिणः ।
तप्तचक्राङ्किता ये च **वैखानसमतानुगाः** ।
ते सर्वे निरयं यान्ति वेदमार्गबहिष्कृताः ॥ ' (देवीभागवते ११-१)

(४) 'चतुष्पदा हि निःश्रेणी ब्रह्मण्येषा प्रतिष्ठिता ।
तां क्रमेण महाबाहो यथावज्जय पार्थिव ॥
तस्मात्पार्थ! महायज्ञैः यजस्व बहुदक्षिणैः ।
स्वाध्याययज्ञास्त्वृषयः ध्यानयज्ञास्तथापरे ॥
कर्मनिष्ठाश्च बुद्धयर्थाः तपोनिष्ठाश्च भारत ।
**वैखानसानां** कौन्तेय श्रूयते वचनं यथा ॥' (महाभारते शान्ति-२०६)

१७. भगवच्छास्त्रविशेषे—

'वैष्णवं द्विविधं शास्त्रं, **वैखानसं** पाञ्चरात्रमिति ।' (मरीचिसंहितायाम्)
'**वैखानसप्रतिष्ठा** चेत् अन्तःस्थापनमिष्यते' ।
(शिल्पशास्त्रे मानसारे. ९–२०१)

१८. एवं यज्ञसाधनभूते हविःपाकपात्रविशेषे— }
१९. नक्षत्रविशेषे— } अस्य शब्दस्य प्रयोगोऽस्ति ।
(Vide Monier Williams.)

श्रीः

# प्रत्यक्षास्तनवः

—:❀:—

D. T. TATACHARYA, Siromani, M. O. L.

वेदान्तेषु निष्णातो महाकविः कालिदासः । न खलु असम्पन्नवेदान्तविज्ञानस्य

आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ।
आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥

नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते ।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधा स्थितात्मने ॥

रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते ।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥

इत्यादि शक्यं वक्तुम् । न परमुपनिषदां, अपि तु ब्रह्मसूत्राणामपि गाढं परिचयमात्मनः —

वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निश्रेयसायास्तु वः ॥

इत्यनेन विक्रमोर्वशीयनान्दीश्लोकेन कविकुलचूडामणिरयं प्रकाशयति । तत्र हि चतुर्षु अध्यायेषु क्रमेण सर्वेश्वरस्य जगदुपादानतया सर्वात्मत्वं, अविरोधः, तत्प्राप्त्युपायो भक्तियोगः, मोक्षश्चेति चत्वारोऽर्थाः प्रतिपाद्यन्ते । तानेव चतुरोऽर्थान् अस्मिन् नान्दीश्लोके क्रमेण चतुर्षु पादेषु अयं प्रतिपादयति । एवमिह वेदान्तप्रमेयतया ईश्वरमुक्त्वा तस्यासाधारणं वैभवं

'एकैश्वर्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः' इति मालविकाग्निमित्रीयनान्दीश्लोके वर्णयति। सर्वमिदं शास्त्रगम्यम्। प्रत्यक्षदृश्यं तु ईश्वरसम्बन्धि किञ्चिद्वक्तव्यमिति मन्यमानः अष्टमूर्तिरिति या ईश्वरस्य संज्ञा तदभिधेयं विशेषं विषयीकुर्वन् अभिज्ञानशाकुन्तल-नान्दीपद्यमारचयति —

> या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
>
> ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्।
>
> यामाहुः सर्वभूतप्रकृतिरिति यया प्राणिनः प्राणवन्तः
>
> प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः॥

इति। अत्र यच्छब्दवद्भिः सप्तभिर्वाक्यैः क्रमेण आपः अग्निः यजमानः चन्द्रसूर्यौ आकाशं, पृथिवी वायुः इत्यष्टौ ईश्वरस्य मूर्तयः पर्यायोक्त्या प्रकाशिताः। इह शकुन्तला लोकोत्तरा विधातृसृष्टिरिति, सा शास्त्रसिद्धेन गान्धर्वविधिना परिणीता गर्भं गृह्णातीति, गर्भस्य आधाता दुष्यन्त इति, आश्रमात् राजधानीं प्रति स्वप्रस्थानसमये दुष्यन्तः शकुन्तलाया राजधानीनयन-कालं सङ्केतितवानिति, दुष्यन्तस्य विस्मरणापराधेन विप्रयोगात् तौ परस्परं श्रुतिविषयगुणौ बभूवतुः, न तु दृष्टिविषयगुणाविति, शकुन्तला मरीचाश्रमे पुत्रं प्रासूतेति, तत्र सपुत्रया तया सङ्गतस्य दुष्यन्तस्य वंशप्रतिष्ठाबुद्ध्या प्रजानां सौराज्याविच्छेदबुद्ध्या च परमा निर्वृतिरभूदिति च काव्यार्थसूचनं स्थितमित्यास्तामिदम्। अबादयोऽष्टौ ईश्वरस्य तनवः ताश्चास्मत्प्रत्यक्षा इति प्रतिपादने कवेरिह संरम्भ इति स्फुटमेतत्।

अत्र केचिदाशङ्केरन् — रूपरहितयोः वाय्वाकाशयोः कथं प्रत्यक्षत्वमिति। न्यायमतविदामियं शङ्का। वेदान्तिनां तु रूपरहितस्यापि वायोः स्पार्शनप्रत्यक्षविषयत्वं आकाशस्य रूपराहित्येऽपि वा रूपवत्त्वेन वा चाक्षुषत्वमिष्टम्। एतन्मतानुसारी च महा-कविरिति समाधानमिह द्रष्टव्यम्। मतान्तरे अनुमानगम्ययोः वाय्वाकाशयोः शास्त्रेतरप्रमाणा-वगतत्वात् प्रत्यक्षत्वमौपचारिकं मन्तव्यम्।

पृथिव्यादीनि पञ्च महाभूतानि चन्द्रसूर्यौ यजमानश्च कथमीश्वरस्य तनवो भवन्ति? यथाऽस्मच्छरीरान्तर्वर्तिनो वयं तत् अस्मदिच्छानुसारेण अस्मत्कार्यसिद्ध्यर्थं प्रवर्तयामः

तथा ईश्वरः तानि प्रवर्तयति । अतस्तानि तस्य शरीराणि भवन्ति । भोगायतनं शरीरमिति शरीरलक्षणमाहुः । एतदनुसारे पृथिव्यादीनां ईश्वरतनुत्वं दुर्घटम् । ईश्वरस्य तदधीन-भोगाभावात् । भोगे सति ईश्वरत्वभङ्गात् । अथ गौणं तनुत्वम्, तन्न । मुख्यार्थान्तरासिद्धेः । प्रयोगबलात् भोगायतनत्वं मुख्योऽर्थ इति चेन्न । अष्टमूर्तिरित्यपि प्रयोगात् । न हि नीलघटे घटपदप्रयोगदर्शनेन घटपदस्य नीलघटो मुख्योऽर्थः, श्वेतघटो लक्ष्य इति निर्णयो युज्यते । सर्वप्रयोगानुगतस्यैव पदवाच्यत्वात् । ईश्वरस्य सर्वात्मत्वं च सम्प्रतिपन्नम् । तेनैव च सर्वस्य तच्छरीरत्वमवश्यमभ्युपेतव्यम् । आत्मप्रतिसम्बन्धिनः शरीरत्वात् ।

इमास्तनवः प्रत्यक्षा इत्यनेन असदप्रत्यक्षा अपि तनवः ईश्वरस्य सन्तीति व्यज्यते । प्रत्यक्षतनुमहिमचिन्तनेन अप्रत्यक्षतन्वादिवैभवं कथञ्चिद् बुद्ध्याऽनुसन्धेयमिति च मन्यते । तदिदं स्वयमेवाह रघुवंशे —

प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमा तव ।
आप्तवागनुमानाभ्यां गम्यं त्वां प्रति का कथा ॥

इति । एवमनुमेयं ईश्वरवैभवं अनन्तम् । इयदिति परिच्छेत्तुमशक्यम् । वाङ्मनसयो-र्गोचरमतीत्य वर्तते । अतस्तद् विहाय ईश्वरस्य महिमानमवगन्तुमिच्छद्भिरस्माभिः प्रथमं प्रत्यक्षास्तदीयास्तनवश्चिन्तनीयाः । पञ्चसु भूतेषु एकैकं परिमाणतोऽतिमहत् । चन्द्रसूर्यौ दूरे स्थितौ अल्पाकारतया दृश्यमानावपि वस्तुतः अतिमहान्तावेव । यजमानो यद्यपि स्वरूपतः अल्पपरिमाणः अथापि 'यज्ञो वै भुवनस्य नाभिः' इति श्रुत्युक्तरीत्या सकलभुवनप्रतिष्ठाहेतु-भूतयज्ञकर्तृत्वात् गुणतः सुमहानेव । इत्थमष्टानामेषां एकैकस्य महत्वं सम्यक् बुद्धावारोपणीयम् । ततः परं, इमाः सर्वा यस्य तनवः, य इमानि सर्वाणि अन्तः प्रविश्य तिष्ठन् स्वयमस्म-च्छरीराणीव यथेच्छं नियमयति, तस्य　　: कियती शक्तिः, कियद् बलं, कियद् ज्ञानं, कियन्तश्च अन्ये गुणा भवितुमर्हन्तीति सुविहितेन मननेन विज्ञातव्यमिति महाकविरिह जनानामुपदेशं चिकीर्षति । ताभिः प्रत्यक्षाभिरष्टाभिस्तनुभिः प्रपन्न ईश इति वदता हि स्पष्टमेव अयमभिप्रायः प्रकाश्यते ।

एवमीश्वरमहिमातिशयावगमौपयिकतया तस्य तन्वष्टकवैशिष्ट्योक्तिरित्युक्तम् । अन्योऽप्यभिप्रायः सुवचः । जडं वस्तु किमपि स्वयं न चलति । यदि चलति तर्हि चेतननोदनादेव ।

पृथिवी बहुधा परिणमते । आपः स्यन्दन्ते । अग्निर्ज्वलति । वायुर्वाति । आकाशमपि वाय्वादिरूपेण परिणतं भवति । सूर्याचन्द्रमसावपि उदयास्तमयाभ्यां कालं कुरुतः । एषामिमाः प्रवृत्तयः एतदन्यथाऽनुपपत्त्या स्वान्तरात्मानं कञ्चन सन्तमवगमयन्ति । स ईश्वरः । तथा च स्वात्मभूतेश्वरसत्तायां प्रमाणतामभ्युपगच्छन्ति प्रत्यक्षदृष्टा एते पदार्था इति । यथा देवदत्तं दृष्ट्वा तदन्तर्वर्तिनमात्मानं प्रतिपद्यामहे तथा पृथिव्यादिकं दृष्ट्वा तदन्तर्वर्तिनं परमात्मानमीश्वरमिति विभाव्यम् । यद्यपि यजमानश्चेतनः तथाऽपि तस्य तदा तदा इच्छा-विघातेन पारतन्त्र्यावगमात् तस्याप्यन्तरात्मा कश्चिदस्तीति ज्ञेयम् । ये तु पृथिव्यादिषु वर्तमानं तन्नियन्तारं परमात्मानमीश्वरं न गृह्णन्ति ते चार्वाककल्पाः 'असन्नेव स भवति असद् ब्रह्मेति वेद चेत्' इत्यौपनिषदोपालम्भगोचरा भवन्तीति मन्यते ।



# ఉత్తరరామచరిత్ర: సమీక్ష.

భూపతి లక్ష్మీనారాయణరావు, M.A., B.Ed.
(*Principal, Govt. Arts College, Rajahmundry*)

అత్యుత్తమములగు సంస్కృత నాటకములలో భవభూతి రచించిన ఉత్తర రామచరిత్ర మొకటి. కాళిదాసుని శాకుంతలమునకు తరువాత నిదియే యుత్త మోత్తమరచన యని పండితుల యభిప్రాయము. నాటకరచనావిధానమును బట్టి మృచ్ఛకటిక, ముద్రారాక్షసములు, దీనికంటెను మిన్నలే యైనను రసపోషణ విషయమునందవి ఉత్తరరామ చరిత్రకు సరితూగజాలవనుట నిజము. ఇందు భవభూతి నిర్వహించిన రసపోషణ వైశిష్ట్యమునుబట్టి కొందఱు పండితు లీనాటక మునకు శాకుంతలముకన్న మిన్నయగు స్థానమొసంగుటకు కూడ ప్రయత్నించినారు. "ఉత్తరే రామచరితే భవభూతి ర్విశిష్యతే" అను వాక్యమునకు, "ఉత్తరరామ చరిత్రనుబట్టిచూడ నాటక రచనయందు కాళిదాసుని కంటెను భవభూతి విశిష్టుడు" అను నర్థము నాపాదింప ప్రయత్నించినారు. ఉత్తరరామ చరిత్ర రచనయందు భవభూతి ప్రదర్శించిన కవితావైశిష్ట్యమును, నిర్వహించిన రసపోషణయు, నుదాత్త ములైనవనుట నిస్సంశయము. కాని, శాకుంతలముకంటెను ఉత్తరరామచరిత ము త్తమరచన యని పండిత విమర్శకులెవ్వరును నంగీకరింపరు. శాకుంతలమున శృంగారము ప్రధాన రసముగ పోషితమైనది. ఉత్తరరామ చరిత్రయందు స్థూల దృష్టికి ప్రస్ఫుటముగ గోచరమగుచున్నది కరుణము. సామాన్యహృదయములను లోగొనుటలో కరుణమునకుగల శక్తి అత్యధికము. కావుననే కించిత్ శోకభావ సమ న్వితమైయున్న రచనను చదివినను, విన్నను, సామాన్యుల హృదయములు ద్రవించు చున్నవి. సాధారణ నాటక ప్రదర్శనములందుగూడ శోక ప్రధానములగు ఘట్టముల చూచినంతనే సామాన్యులగు సామాజికులు, అందును స్త్రీలు, తద్భావమునకు లోనై సాత్త్విక భావోదయమునకు పాల్పడుదురు. కరుణరసమునకు మానవ హృదయ ముపైగల ప్రాబల్యమట్టిది. శ్రవ్యకావ్య రచనయందుగాని, దృశ్యకావ్యమును రచించుటయందుగాని తద్రసపోషణకూడ నంతకష్టము కాదు.

శృంగారరస విషయము వేఱు. తద్రసపోషణము కత్తివాదరపై సాము వంటిది. సున్నితములగు సన్నివేశములు, లలితములగు భావములు, కోమలాతి కోమలము సమర్థమునైన భాష, అసాధారణమగు కవితాశక్తి, ఇన్నిటికంటెను ముఖ్యముగ ఔచితిని విడనాడని సంయమనము కల్గియున్ననే తప్ప శృంగారమును

సరసముగ కవి పోషింపజాలడు. సాత్త్విక శృంగార స్వరూపమెట్టిదో గ్రహించుటయే మొదట కష్టము. ఒక్కవేళ గ్రహించినను, దాని నుదాత్తమార్గమున పోషించుట మఱింత కష్టము. కావుననే సామాన్యుల రచనలలో శృంగారరసస్ఫూర్తి కలుగకుండుటయో, లేక, తన్నిర్వహణము మితిమీరి రసాభాసకు నెలవగుచుండుటయో చూడనగుచున్నది, శృంగారమును సహృదయ హృదయంగమముగ, లలితముగ పోషించినవారిలో కాళిదాసుడు ప్రప్రథముడనక తప్పదు. అందును శాకుంతలము, శృంగార రసపోషణ విషయమున అద్వితీయమగు రచన. తృతీయాంకమున శకుంతలాదుష్యంతుల ప్రణయసమాగమము నిందు పాఠకు లనుసంధింతురు గాక! "సంవాహయామి చరణావుత పద్మతామ్రౌ" అని నాయకునిచే పలికించునంతటి రతిభావప్రాబల్యమునకు కాళిదాసు తీసికొనివచ్చియు రసాభాసకేమాత్రము నాస్పదమొసంగక, తదనంతర కథాభాగమునెట్లు నిర్వహించినాడో గమనింపవచ్చును. "పౌరవ, రక్షవినయమ్ .... .... .... ఆత్మనః న ప్రభవామి",అని శకుంతలచే పలికించుటయు, మంత్రోదకముతో వృద్ధగౌతమిని ప్రవేశపెట్టి యాక్లిష్టసన్నివేశమును ధ్వనిప్రధానముగ నిర్వహించుటయు, కాళిదాసుని నాటక శిల్పచాతురికి నిదర్శనములు. అట్లే సప్తమాంకగత శకుంతలా పునస్సమాగమ సందర్భమున భావోద్వేగమున దుఃఖించుచున్న శకుంతల కన్నీటిని నాయకునిచే తుడిపింపజేయుటలో కవి యెంతటి మనస్తత్త్వ పరిజ్ఞానము ప్రదర్శించినాడో, శృంగారము నెంత లలితముగ పోషించినాడో గమనింపవచ్చును. రస విషయమున నిట్లు విభిన్నములై యున్న శాకుంతల, ఉత్తరరామ చరిత్రలను ఒండొంటితో పోల్చి తారతమ్య నిరూపణ గావించుటకు వీలులేదు. భవభూతి రచించిన రూపకత్రయమునందును ఉత్తరరామ చరిత్ర అత్యుత్తమమగు రచన యగుటచే "ఉత్తరే రామచరితే భవభూతి ర్విశిష్యతే" అను వాక్యము పండితలోకమున వ్యవహృతమైనది. అంతియే కాని శాకుంతలముతో పోల్చి పండితులొసంగిన తారతమ్య నిర్ణయ వాక్యము కాదిది.

ఈ విషయ మెట్లున్నను, ఉత్తరరామ చరిత్ర అత్యుత్తమ రచనలలో నొకటి యనుట నిక్కము. కవి—మహాపండితుడు, వశ్యవాక్కు, ప్రతిభావంతుడు, మీదు మిక్కిలి అసాధారణమగు భావనాశక్తిగలవాడు. ఇతడు వ్యక్తముచేసిన భావములను బట్టిచూడ నితని హృదయము సుకుమారము, విశాలము ననికూడ స్పష్టమగుచున్నది. రామాయణోత్తరకాండ కథ సహజకోమలమగు నితని కవితావిధానమునకు అనుగుణమగు నితివృత్తముగ నేర్పడినది. ప్రాచీనులగు నితర కవులవలెనే భవభూతియు, రామాయణేతివృత్తముచే నాకర్షింపబడినాడు. ఉదాత్తనాయకుడగు

రాముని చరిత్రయు, భారతీయ స్త్రీత్వమున కాదర్శమగు సీతాదేవిజీవితగాథయు, నీ కవుల హృదయములను చూఱగొన్నవి. విస్తృతమగు పూర్వకాండ కథ, నాటకరచన కనుకూలింపదని గుర్తించిన కాళిదాసు దానిని శ్రవ్యకావ్యముగ రచించి కృతార్థుడైనాడు. తదితివృత్తమును నాటకవస్తువుగా పోషింపబూని విఫల ప్రయత్నులైన మురారి జయదేవాదులవలెనే భవభూతియు మహావీర చరిత్ర రచనయందు విఫలుడైనాడు. కావ్యత్వ మబ్బినను నాటక స్వరూపము దానికి సిద్ధింపలేదు. ఇతివృత్తము నాటకరచన కనుకూలించునది కాకుండుటయే యిందులకు కారణము. దీనిని గుర్తెఱింగిన వాడువోలె భవభూతి ఉత్తరకాండకథను నాటకీకరించుట మేలైనది. ఉత్తరకాండ కథ సహజముగనే మనోహరమైనది. సీతాపరిత్యాగ వృత్తాంతమే ప్రధానవిషయముగ కథ నడచుచుండుటచే నవాంతరేతివృత్తముల కిందు ప్రసక్తిలేదు. సీతాపరిత్యాగ విషయమారంభముగ పునస్సమాగమము వఱకును నితివృత్తము నేకముఖముగ నడపించుట కిందవకాశ మెక్కువగ కల్గినది. నాయికా నాయకుల చరిత్రలును నుదాత్తభావ సమన్వితములైనవి. సీతా పరిత్యాగ సంఘటనము ఆధారముగ నాయికానాయకుల అన్యోన్యప్రేమను విప్రలంభమార్గమున చిత్రించుటకును, వియోగతప్తులగు వీరి హృదయవ్యథ ఆధారముగ కరుణ రసము నుత్పాదించుటకును, కవికి చక్కని యవకాశము లభించినది. ఇట్లు నాటకోచితమైయున్న రామాయణోత్తరకాండ కథను, భవభూతి గ్రహించి, తన ప్రణాళిక కనుకూలమగు విధమున దిద్దితీర్చి తన నాటకమున కితివృత్తముగజేసి కొనినాడు. కాళిదాసాదులవలెనే యితడును మూలకథను కొన్ని పట్టుల మార్చియు, కొన్ని కల్పనలనుచేర్చియు, తన ప్రయోజనమున కనుకూలించునట్లు, ఇతివృత్తమును సంస్కరించుకొనినాడు. కథా సంవిధానమునకును, రసపోషణపాత్ర పోషణలకును కూడ నీ మార్పులును కల్పనలును నెంతయో ప్రయోజనకరములైనవి. కరుణరస పోషణకై యీ కవి గావించిన సన్నివేశకల్పనము ఇతని భావనాశక్తికిని, ప్రతిభకును చక్కని నిదర్శనములు. తృతీయాంకమందలి యీ సన్నివేశమే నాటకమున కాయువుపట్టు. శాకుంతలమునకు చతుర్థాంకమువలె, ఉత్తరరామ చరిత్రకు తృతీయాంకము హృదయ పేటికయై యున్నది. కథా సంవిధాన మేర్పరచుకొనుట, రసపోషణకు తగిన సన్నివేశములను గూర్చుట, వాని యాధారమున భావములను క్రమ మార్గమున పోషించి రసపర్యవసితమొనర్చుట, భావములను పోషించుటలో నసాధారణమగు కవితా సామర్థ్యమును ప్రదర్శించుట—ఇవి ఉత్తరరామ చరిత్ర యందు మనకు సువ్యక్తములగుచున్న యంశములు.

నాటక రచనయందు ప్రధానమైనది కథాసంవిధానము. పాత్రపోషణరస పోషణాదులన్నియు దీని ననుసరించియే యుండును. కావున నితివృత్తమును గూర్చుకొనుట, దానిని తగురీతిగా విభజించి చిత్రించుట, ఉద్దిష్ట ప్రయోజనసిద్ధి కను కూలమగునట్లు కథను నడపుట, అనునవి ముఖ్యవిషయములు. శ్రవ్యకావ్యమైనచో పూర్వోత్తర విషయములను కవి స్వయముగ వివరించుటకును, ఆ యా భావములను విశదీకరించుటకును వీలగును. దృశ్యకావ్యములలో అంతయు పాత్రముల సంభాషణను బట్టియే వ్యక్తము కావలసియుండుటచే, కథా సంవిధానము ప్రాధాన్యము వహించుచున్నది,

ఉత్తరకాండ ననుసరించి సీతారాముల యుదంతము మోదాంతముకాదు. యజ్ఞసమయమున రామాయణమును గానముచేసిన కుశలవులను సీతా కుమారులుగా రాముడు శంకించి సీతను వాల్మీక్యాశ్రమమునుండి పిలిపించును. తన శీలమును గూర్చి శంకించిన లోకమున నుండనొల్లని సీత, తల్లియగు వసుంధరను ప్రార్థించి యామె గర్భమున లీనమైనది. తన పాతివ్రత్యమాహాత్మ్యముల నిట్లు లోకమున ప్రదర్శించియు సీత యిహలోకమును వీడుటచే రాముడేకాకియైనాడు. దృశ్య కావ్యరచనకు పూనుకొనిన భవభూతి, కథనుమార్చి, సీతారాముల పునస్సమాగ మముచే నాటకమును మోదాంతమొనర్చినాడు. ధర్మబద్ధులు, సత్యసంధులు, నిష్కళంకులు నగు నాయికా నాయకులకు శాశ్వతమగు హాని కలిగినట్లు దృశ్య కావ్యములందు చిత్రించినచో, విద్వాంసులగువారి విషయమెట్లున్నను పామరుల హృదయములు క్షోభచెందుననియు, న్యాయధర్మముల యెడ వారికి ప్రత్యయము నశించుననియు ప్రాచీనుల అభిప్రాయము. ఈ సంప్రదాయము ననుసరించియే భవభూతియు, సీతారాముల పునస్సంయోగముచే నితివృత్తమును ముగించినాడు. పునస్సంయోగ ముద్దిష్టమగుటచే నిరాస రూపమగు సీతా మనశ్శల్యము తత్పూర్వమే ఉద్ఘాటితము కావలసియుండును. తన హృదయమును, గుణమును నెఱింగియుండియు భర్త తన్ను త్యజించినాడన్న భావము సీతాహృదయము నందున్నంతవఱకును, పునస్సమాగమము కల్పించుటకు కవికి వీలులేదు. తన విషయమున భర్తకుగల అనురాగమెట్టిదో సీతకు ప్రత్యక్షముగ గోచరించిననే తప్ప, ఆమె మనశ్శల్యము తొలగజాలదు. ప్రజారంజనార్థమై విధిలేక తనను రాముడు గృహమునుండి పంపి నాడనియు, తన వియోగమువలన రాముడును తనవలెనే యెంతయు తపించు చున్నాడనియు, సీత గ్రహించుట ముఖ్యము. కావున సీతారాములకు పూర్వపరిచిత మగు జనస్థానమున విచిత్రమగు సమాగమమును కవి కల్పించి, తన ప్రయోజన

మును సాధించుకొనినాడు. ఈ సమాగమార్థమై శ్రీరాము నందు గొనిపోవుటకు శంబూకవృత్తాంత మవసరమైనది. దండకారణ్య ప్రదేశమగుటచే రామునకు సీతా స్మరణ కల్గుటయు, తన పూర్వవృత్తాంతమంతయు కన్నులకు గట్టినట్లు మనసున గోచరమగుటయు తప్పదు. భావోద్వేగమునకులోనై రాముడు మూర్ఛిల్లుట, తద్రక్షణార్థము సీతాహస్తస్పర్శ అవసరమగుట, ఇత్యాది సంవిధానమేర్పడినది. తరువాతి ఘట్టమునందలి కుశలవ వృత్తాంతమును, తదనుగత వృత్తాంతములును, ఈ సీతారామ పునస్సమాగమమునకే సాధకములైనవి. ఈ యితివృత్తమును నడపించుటలో కవి యవలంబించిన విధానము కార్యకారణ సంబద్ధమైయున్నది. కవి కూర్చిన కల్పనలుగూడ స్వాభావికములై కథా సంవిధానమునకు ఉపకరించినవి.

సీతపై ప్రజలలో వ్యాపించియున్న యపవాదమును ప్రజారంజకుడగు రాముడు విని సీతను భాగీరథీతీరారణ్యములకు పంపించివేయుట ప్రథమాంకమందలి ప్రధానేతివృత్తము సీతా పరిత్యాగానంతరము పండ్రెండు సంవత్సరములకు పిమ్మట జరిగిన వృత్తాంతముతో ద్వితీయాంకము ప్రారంభమగుచున్నది. శంబూకవధార్థమై రాముడు దండకారణ్యమున ప్రవేశించుట, పిమ్మట జనస్థానమందలి చిరపరిచితములగు దృశ్యములచే సీతను స్మరించుకొని దుఃఖించుట, ద్వితీయ తృతీయాంకముల యందలివిషయము. భాగీరథీ మాహాత్మ్యముచే నితరుల కదృశ్యలై సీతా తమసలు ప్రవేశించుటయు, రాముని దీనావస్థను సీత కనులార గాంచుటయు, ననునవి యిందు కవి యేర్పరచిన సంవిధానములు. రామునకు సీతయందుగల గాఢమగు ప్రేమ వ్యక్తమగుటకును, పరిత్యాగ కారణముగా సీతా హృదయమున కల్గిన ఖేద ముపశమించుటకును, నీ సన్నివేశము ప్రయోజనకారి యైనది. సీతారాముల పరస్పర ప్రేమ నాధారముగాచేసికొని వారి వియోగ దుఃఖము నతిరమణీయముగ రసవంతముగ వర్ణించుటకు, కవికీ ఘట్ట మవకాశమొసగినది. ఋష్యశృంగుని ద్వాదశ వార్షికసత్రమును పరిసమాప్తి గావించి గృహాభిముఖులై వచ్చుచున్న కౌసల్యాదులు, సీతా నిరాసమునుగూర్చి విని దుఃఖితలై నగరమునకు పోనొల్లక వాల్మీక్యాశ్రమమున నిల్వ సంకల్పించుటయు, నందు వైఖానస వ్రతము బూని పర్యటించుచున్న జనకునితో వారికి సమాగమము కల్గుటయు, లవునియందు సీతారూపరేఖాదులను గాంచి కౌసల్యాదు లతడు సీతా పుత్త్రుడేమో యనెడి శంకకు లోనగుటయు, మేధాశ్వరక్షణార్థమై లక్ష్మణ కుమారుడగు చంద్రకేతు డందువచ్చుటయు, నిత్యాదులు—ఈ తృతీయభాగమందలి కథాంశములు. జనస్థానమును వీడి అయోధ్యకు పుష్పక విమాన మందేగుచుండిన రాముడు లవునితో యజ్ఞాశ్వ విషయ

మున పోరుచున్న చంద్రకేతువును మార్గమున గాంచి యందు దిగుటయు, లవ కుశులతో నతనికి సమాగమము కల్గుటయు, వారియందు స్పష్టముగ వ్యక్తమగుచున్న సీతా రూపరేఖాదులను బట్టి వారు సీతాకుమారులై యుందురేమో యనెడి శంకకు రాముడు లోనగుటయు, పిమ్మట జనకుడు, కౌసల్యాదులు రాముని చూచుటయు, నను నంశములు చతుర్థభాగమునకు చెందినవి, సప్తమాంకేతి వృత్తము కథా సంవిధానమునం దైదవభాగము. వాల్మీకిచే రచితమైన యంతర్నాటిక పౌరుల సమక్షమందు ప్రదర్శిత మగుటయు, పరిత్యాగానంతరపు సీతా వృత్తాంతము రామాదులకు తెలియవచ్చుటయు, సీతాదేవి దివ్యచరిత్ర పావిత్ర్యములు భాగీరథీ వసుంధరలచే ప్రత్యక్షీకరింపబడుటచే ప్రజాపవాదము నిరాసమగుటయు, సీతా రాములకు పునస్సమాగమము కల్గుటయు నను నవి యీ భాగమందలి కథాంశములు. ఇట్లు స్థూలముగ నైదు ఘట్టములుగా నితివృత్తమును విభజించుకొని ఆ యా ఘట్టముల నతి నైపుణ్యముతో రసవంతముగ చిత్రించినాడు.

పట్టాభిషేకానంతరము తదర్థమై అయోధ్యకువచ్చిన బంధు మిత్త్రాదులు స్వదేశములకు మఱలిన తరువాతి కథతో ప్రథమాంక మారంభమగుచున్నది. ఈ పూర్వగాథ ప్రస్తావనచే సూచితము. తండ్రియగు జనకుని యెడబాటువలన ఖిన్నురాలై యున్న సీత ననునయించుటకై రాముడు ధర్మాసనమునుండి ఉత్థితుడగుచున్నాడనుట ప్రస్తావనాంతమందుగల నటుని వాక్యము. దీని ననుసరించి రాముడు సీత నోదార్చుచున్నట్లు ప్రథమాంక కథ ఆరంభమగుచున్నది. విషాద గర్భితమగు నొక నాటకీయాంశ మిందు సూచితమై యున్నది. సాధారణముగ నుదాత్త నాయకునకు జీవితమున నేర్పడెడి కష్టపరంపరకును, తన్మూలమున నతడును అతని యాప్తులును ననుభవించు క్లేశమునకును మూలకారణము నాయకునియందలి యొకానొక అల్పలోపమో లేక దౌర్బల్యలేశమో అగుచున్నది. పాశ్చాత్య నాటక విమర్శకులును, మన శాస్త్రవేత్తలునుకూడ నంగీకరించిన విషయమిది. జీవితము నందలి సుఖదుఃఖముల కన్నిటికిని పురాకృత కర్మపరిపాకమే మూలమని భారతీయుల విశ్వాసము. ఈ జీవిత సంఘటనలకు సంచితము బలీయమగు మూలమేమైయున్నను, నాయా సుఖదుఃఖములకు ప్రత్యక్షకారణమొకటి స్వల్పమైనదియే యైనను నుండకపోదు. ఇది ప్రకృతిసిద్ధమగు విషయము. ఉత్తరరామ చరిత్ర కథా విషయమునగూడ నిది సమన్వయమగుచున్నది. జనకుని స్వదేశగమనముచే విమనస్కయైయున్న సీతాదేవిని సాంత్వన పరచుటకై రాముడు ధర్మాసనమును వీడి గృహమునకేగెనని ప్రస్తావనాంత వాక్యము.

